१८१ अहिर्बुध्न्यार्य्यमेशावौ मित्रज्येष्ठामृगौ तथा वसुपौष्णपदे सिंहौ हस्तस्वाती च माहिषौ १८२ चित्राविशाखे व्याघ्राख्यौ अभिजि
च्छ्रवणौ च बभ्रुकौ योनयः कथिता भानां वैरं मैत्रीं विचारयेत १८३ श्रीपतिः गोव्याघ्रंगजसिंहमश्वमहिषं श्वानं च बभ्रूरगं वैरं वानरमे
षयोश्च सुमहत्तद्वद्विडालन्दुरम् लोकानां व्यवहारतोन्यदपि च ज्ञात्वा प्रयत्नादिदं दंपत्योर्न पमस्त्ययोरपि सदा वर्ज्यः शुभस्यार्थि
भिः १८४ राश्याधिपो लघुजातके ० कुज १ शुक्र २ ज्ञे ३ न्दु ४ अर्क ५ ज्ञ ६ शुक्र ७ कुज ८ जीव ९ सौरि १० यम ११ गुरवः १२ भेशाः १८५
शुक्रमन्दशिनौ सम पूर्वशशिजीस्मित्राणि शेषा रवेः तीक्ष्णांशुर्हिमरश्मिजेस्य सुहृदौ शेषाः समाः शीतगोः १८६ जीवेन्दूष्णक
राः कुजस्य सुहृदो ज्ञोरिः शितार्कीसमौ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे १८७ सूर्येसेम्यशीनावरी रविसुतो

| ॥ अथ मैत्रीचक्रं लिख्यते ॥ ॥ ॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| र. | चं | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
| चं. बृ. मं. | र. बु. | र. चं. बृ. | शु. र. | मं. च. र. | श. बु. | बु. शु. | मित्राः |
| बु. | बृ. मं. शु. श. | शु. श. | मं. श. बृ. | श. | मं. बृ. | बृ. | समाः |
| श. शु. | ० | बु. | चं. | बु. शु. | र. चं. | र. चं. मं. | शत्रवः |

मध्येऽपरेत्वन्यथा सौम्यार्कौ सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी १८८ शुक्रज्ञौ सुहृ
दौ समः सुरगुरुः सौरस्य चान्येऽरयः इति ग्रहमैत्रीचक्रम् अथ गणाः तत्र श्रीपतिः ॥
हस्तस्वातिश्रुतिमृगशिरःपुष्यमैत्राश्विभानि पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भा।
नि पूर्वास्तिस्रः शिवभरणीरोहिणीत्युत्तराश्च प्राहुर्मर्त्याह्वयमुडुगणं नूनमेतन्मुनीन्द्राः
१८९ चित्राश्लेषानिऋतिपितृभे वासवेर्बासवाक्षशक्राग्न्याभे वरुणदहनर्क्षे च रक्षो
गणोऽयम् श्रेष्ठा प्रीतिः स्वकुलगणयोर्मध्यमा देवपुंसामन्त्यं दैवैः सहरक्षसां वैरमाहुः

१९० अथवर्ग्गाः तत्रादौ ॥ अ८क५च६ट४त७प१य३श२ वर्ग्गाः खगेशमार्ज्जारसिंहश्वानाम् सर्पाखुमृगावीनां निजपञ्चम
वैरिणामष्टौ १९१ अथराशिकूटं रत्नमालायाम् षट् ६ काष्ट८ के मृत्युरपत्यहानिः पाणिग्रहः स्यान्नवपञ्चमेषु ९।५ नैस्वथ
नं द्वादशाके २।१२ परेषु प्रेमातिरेको हि वधूवरस्य १९२ ग्रन्थान्तरे० एकाधिपत्येसमसप्तकेवाल्लाभेतृतीयेदशमेचतुर्थे नाडी।
वियोगगणानेत्रभाऽवंनचिंतयेदुद्वहनादिकाले १९३ ग्रहमैत्रखराशिदोषोनास्ति० अथनाडीचक्रम् तत्रवशिष्टः आवृत्तिभिर्भ=
स्त्रिभिराश्विभाद्यैः क्रमोत्क्रमाभ्यांगणयेदुडूनि यद्येकपर्व्वण्युभयोः स्थितिस्तेनेष्टानृनार्य्योर्भृशमेकनाडी १९४ राश्यैके चिद्भिन्नमृक्ष
द्वयंस्यान्नक्षत्रैक्येराशियुग्मंतथैव नाडीदोषोनोगणानांचदोषोनक्षत्रैक्येपादभेदेशुभंस्यात् १९५ अथपादवेधः स्वरोदये आद्य
शेनचतुर्थांशंचतुर्थांशेनचादिमम द्वितीयेनतृतीयंतुतृतीयेनद्वितीयकम् १९६ अथविवाहदिवससोधनम् तत्रादौदशयोगचक्रम् १९६
अथविवाहदिवससोधनम् तत्रादौदशयोगचक्रम् शून्ये०क१वेद४अर्कतवो६दश१०रुद्र११युक्ताः पञ्चैक१५ नागशिशिरांशु १८
नवैक१९ स्वाश्विः २० आद्यर्क्षतः शशिदिवाकरभानियुक्तंभागंचदेयमुडुभिर्दशयोगचक्रम् १९७ वायुवर्षाग्निभूपालचौरमृत्यु
ज्वराक्रमात् वज्रवारक्षतिः नूनंदशयोगफलंभवेत् एतन्निमित्तेशेषाकेविवाहोनिषिद्धः १९८ अथलत्ता० नक्षत्रंद्वादशभा।
नुम्ब्रतीयंलत्तयाकुजः षष्ठंजीवोष्टमंशौरिर्हन्तिदक्षिणतः सदा १९९ वामेनसप्तमंचाद्रीनवमंसिंहिकासुतः पञ्चमंभृगुजोह
न्तिद्वाविंशंपूर्णचन्द्रमाः २०० अथपातः अस्मत्संग्रहे० सूर्य्यभात्सर्प्पमघाचचित्राभैत्रंतथैवच श्रवणोरेवतीप्रोक्तंपातभमुनिसंमनम्

२०१ अश्विनीभादितोगण्यंपातभंयदिसंमतम् तद्दिनेचविवाहादिनकर्तव्यंकदाचन २०२ अथयुतियामित्रदोषः अत्रिः पा
पात्सप्तमगः शशियदिभवेत्पापेनचेत्संयुतो यत्नेनापिविवर्ज्जयेन्मुनिमतोदोषोपिसंकथ्यते यात्रायांविपदोगृहेषुमरणंक्षौरे
षुरोगोमहानुद्वाहेविधवाव्रतेचमरणंशुल्वंचपुष्कर्म्मणि २०३ तत्रविशेषः पातयुक्तंचनक्षत्रंविवाहनक्षत्राच्चतुर्द्दशम१४विवाहे
नेष्टः अथपंचशलाका॥ क्रूरैर्म्मुक्तंक्रूरगंतव्यमृक्षंक्रूराक्रांतंक्रूरविद्धंचनेष्टम् यच्चोत्पातैर्भौमदिव्यान्तरक्षैर्दुष्टंतद्वक्रूरलत्ताह
तंच २०४ चक्रेतस्मिन्नेकरेखास्थितेनज्ञेयंनूनंविद्धमृक्षंग्रहेणकेचित्तस्मिन्प्रोच्यतेपादवेधोभानांचिन्त्यस्तत्रल




त्तानिपातः २०५ उत्तराषाढस्यान्त्यपादः श्रवणचतुर्दंडकाद्यो अभिजिद्भुक्तिः
यस्याशशिःसप्तशलाकभिन्नःपापैरपापैरथवाविवाहे उद्वाहवस्त्रेणतु
सावृताङ्गीस्मशानभूमौरुदतीप्रयाति २०६ अथखार्ज्जुरचक्रम् तत्रश्रीपतिः
व्याघातशूलपरिघव्यतिपातपूर्व्वंगण्डान्तिगण्डकुलिशेषुसवैधृतेषु आदि
त्यचन्द्रपितृसर्प्पभरश्रमूलमैत्राख्यतिष्यसहवाह्निकिभानि मूर्द्ध्नि २०७ यस्मिन्दि
नेकरेखायासूर्य्यचन्द्रमसोभवेत दृष्टिपातस्तयोस्तस्मिन्मङ्गलंचविवर्ज्जयेत् ॥
२०८ अथबाणपञ्चकम्॰ धाय्यातिथिः१५सूर्य्य१२दशा१०ष्ट८वेदा४संक्रां

॥इतिनाडीचक्रम॥

| | | |
|---|---|---|
| अ॰ | भ॰ | कृ॰ |
| आ॰ | मृ॰ | रो॰ |
| पु॰ | पु॰ | श्ले॰ |
| उ॰ | पू॰ | म॰ |
| ह॰ | चि॰ | स्वा॰ |
| ज्ये॰ | अनु॰ | वि॰ |
| मू॰ | पू॰ | उ॰ |
| श॰ | ध॰ | श्र॰ |
| पू॰ | उ॰ | रे॰ |

कृ रो मृ आ पु पू श्ले
भ अ रे उ पू श ध
म पू उ ह चि स्वा वि
अ अभि उ पू मू ज्ये अनु

तिमोजातदिनैश्चयोज्याग्रहैर्विभक्तायदिपत्रपञ्च ५ शेषोरुजाग्निर्नृपचो
(रेन्यु: २०९ अथोपग्रहाः भुकम्पः सप्त ७ मर्क्षे भवति सवितुर्भात्पञ्चमे ५ विद्यु
युक्तः शूलं चैवाष्ट ८ संख्ये शनिरितिदशमे १० केतुरष्टादशे व १८ दण्डस्त्रिपञ्च १५
संख्ये सनवदशमिते नूनमुल्का प्रदिष्टाधिष्ण्यैः समसंख्ये १४ मुनिभिहितश्चा
त्रनिर्घातपातः २१० भाद्दकविंशति २१ मिताल्कथिनास्तुमोह २१ निर्घात २२ कम्प
२३ कुलिशाः २४ परिवेष २५ युक्ताः एषिन्दुगेषु नशुभं दं खलु कर्म्मकार्य्यसिद्धिःप्र
याति दहनास्त्रविषादिकर्म्म २११ अथक्रान्तिसाम्यम० मुहूर्तचिन्तामणौ दिपा
श्चा ५ स्याजो गो २ मृगो १० तौलि ७ कुंभो १२ कन्या ६ मीनो १२ कर्को ४ ली ८ चा
प ९ युग्मे ३ तत्रान्योन्यं चन्द्रभान्वोर्निरुक्ता क्रान्तिः साम्यं नो शुभं मंगलेतत्॥



२१२ अथपट्टाचक्रम् तत्रकाशिनाथः पट्टाकारं लिखेच्चक्रम् षट्कोणसमन्वितम् यस्मिन्नृक्षे स्थितः सूर्य्य
स्तदाद्यं मध्यमं त्रयम् त्रयं ३ त्रयं ३ च सर्वत्र ततः पूर्वादितो लिखेत् २१३ अस्मिन्सग्रहे पक्षद्वयोर्न्नशुभंदं धनलाभमृ
त्यूरोभाग्य संततिसुखैर्विधवान्यसक्ता धान्यानिसंचयकरी सुखसंपदाप्तिर्मध्यादितः फलमुसन्तीहसव्यमार्गो २१४ अथ

ल॰सं॰ कर्त्तरीयोगः तत्र वाराहः द्वयोः पापग्रहोर्मध्ये चन्द्रलग्नो भविष्यतः तदा मृत्युर्विजानीयात्यञ्चाब्देनात्र संशयः २१५ सौम्ययो
१२ गान्कर्त्तरीयोगो न स्यात् वशिष्ठः एकार्गलोपग्रहपातलत्तयामित्रकर्त्तर्युदयास्तदोषाः नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने य=
यार्काभ्युदये तु दोषा २१६ उपग्रहर्क्षं कुरुबाह्लिकेषु कलिङ्ग॰बङ्गे षु च पातितं भम् सौराष्ट्रसाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं ।
किल सर्वदेशे २१७ मुहूर्त्तचिन्तामणौ॰ जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत्

॥अथक्रान्तिसाम्यम्॥

| | १ | १२ | ११ | |
|---|---|---|---|---|
| २ | | | | १० |
| ३ | | | | ९ |
| ४ | | | | ८ |
| | ५ | ६ | ७ | |

२१८ श्रीपतिः उदयगतनवांशे स्वेशदृष्टो युतो वा न भवति यदि मृ
त्युः स्यात्तदानीं वरस्य परिणयसमये चेन्नैवास्तोदशांशः स्वपतिसु
हितदृष्टा मृत्युकारी च वध्वाः २१९ विवाहपटले भौमे लग्न १ कलत्रे
७ नैधन ८ गते शुक्रारि ६ सप्त ७ ष्ट ८ गे चन्द्रे रन्ध्र ८ विलग्न १ षष्ठ ६ नि
रते लग्ना १ स्तगे ७ भास्करे तद्वज्ज्ञानुसुते १।७ गुरौ निधनगे ८ सौम्येष्ट ८
यामित्रगे ७ जायां ७ भोधि ४ विलग्न १ कर्म्म १० निरते राहुर्न पाणिग्रहः
२२० रामः पापौ कर्त्तरिकारकौ रिपुगृहे नीचेस्तगौ कर्त्तरीदोषो नैव ।
शितेः रिनीचगृहेगतत्वष्ट ६ दोषोपि न भौमेऽस्तरिपुनीचमे न हि भवेद्भौमो १२

॥अथपट्टाकारचक्रम्॥ ०

६।८मोदोषकृन्नीचेनीचनवांशके शशिनि रिष्फा १२ ष्टा ८ रिदोषोपि न २२१ श्रीपतिः हिबुक ४ धर्म्म ९ सुतो ५ द्य १ कर्म्मसु १०
त्रिदशराजगुरौ यदि वाशिते यदशुभं शुभतां समुपैति तत्च्छुभफलं नितरामभिवर्द्धते २२२ अब्दायनर्त्तुतिथिमासभपक्षदग्धाप्तित्र्य
न्धकाणवधिरांगमुखाश्वदोषाः॥ नश्यन्ति विद्गुरुशशिनेष्विह केन्द्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषाः २२३ लग्नाधिपं बिना द्यूने सर्वे
खगानेष्टाः अथ गोधूली नास्यां मृक्षं न तिथिकरणं नैव लग्नस्य चिन्ता नो वा वारो न च लववविधिर्नो मुहूर्तस्य चिन्ता नो वा योगो न मृतिभवनं
नापि यामित्रदोषो गोधूलिः सा मुनिभिरुदिता सर्वकार्य्येषु शस्ता २२४ ग्रन्थान्तरे लग्नं यदा नास्ति विशुद्धिमन्यद्गोधूलिकं साधु नदा
वदन्ति लग्ने विशुद्धे सति वीर्य्ययुक्ते गोधूलिकं नैव वदन्ति सन्तः २२५ रामः अस्तं याते गुरुदिवसे सौरे सार्के लग्नान्मृत्यौ रिपुभवने।
चन्द्रे कन्यानाशः तनुमदनमृत्युस्थे भौमे वोढुर्न्नाशो लाभे ११ धनसहजे ३ चन्द्रे सौख्यम् २२६ अथ वधूप्रवेशः समाद्रिपञ्चाङ्क
दिने विवाहाद्वधूप्रवेशोष्ट १६ दिनान्तराले शुभः परस्ताद्विषमाब्दमासदिनेऽक्ष ५ वर्षात्परतो यथेष्टम् २२७ अथ प्रवेशनक्षत्राणि
ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले वधूप्रवेशः सन्नेष्टो रिक्ता ४।९।१४ र्कै १२ बुधे परैः॥ अथ द्विरागमः॥ दैवज्ञचिन्तामणौ।
ज्येष्ठापुष्यपुनर्वसूत्तरहरिब्रह्मानुराधाश्विनीहस्तादित्रयपौष्णमूलमृगभे मेषालिकुम्भे रवौ कन्यानोज्जि ७ नृयुग्म ३ मीन १२ मकरे १०
लग्ने चया त्रातिथौ नारीणां शुभदो द्विरागमविधौ जीवज्ञशुक्रेऽह्नि ११ शुक्लेपक्षे कार्य्यमिति अथ पुंनार्य्योः प्रथमसमागमे उत्त
रात्रयरोहिण्या पुष्ये मैत्रे करे मृगे चित्रास्वातीविशाखासु पुंनार्य्योः संगमः शुभः २२८ कन्यादेवेनिक ७ मीन १२ गो २ दृग्लि ८ भवने केन्द्र।

स्थिते सद्ग्रहे पापे विक्रय ३ लाभ ११ वैरि ६ सहिते द्यूने ७ शुभैरीक्षिते वारे सौम्यदिने सुविष्टिकरणे सत्खेचरिक्राष्टमे एकार्गलरहितेति
थौ शुभविधौ दारोपभोगः स्मृतः २२९ दैत्येज्यो ह्यभिमुखे दक्षिणे यदि स्याद्दृष्टेऽस्ते पुनर्हि शिशुगर्भिणी नवोढाः बालश्चेद्व्रजति विपद्य
ते नवोढा च वन्ध्या भवति च गर्भिणी त्वगर्भा २३० नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः नृपपीडने नववधूप्र
वेशने प्रतिभार्गवो भवति दोषकृन्न हि २३१ पित्र्ये गृहे चेत्कुचपुष्पसंभवस्तदा न दोषः प्रतिशुक्रसंभवः भृग्वङ्गिरोवत्सवशिष्ठक
श्यपात्रीणां भरद्वाजमुनेः कुले तथा २३२ इति लघुसंग्रहे विवाहद्विरागमनप्रकरणम् अथ यद्धांगयात्रायां राहुविचारः अलि
धनुर्मकरार्के पूर्वसंस्थश्च राहुर्घटसफरतयोर्वै दक्षिणे सैंहिकेयः वृषमिथुनकुलीरे पश्चिमे दिग्विभागे हरियुवतितुलायां चो
त्तरे ह्यगराहुः २३३ सोमदत्तः अग्रतो राहुर्वैधव्यं दक्षिणे सुतहा भवेत् पृष्ठे पुत्रवती प्रोक्ता वामे सौभाग्यदायिनी २३४ यथा भृगुर्द
क्षिणसन्मुखस्थो मृगीदृशीनामशुभो गमे सदा तथैव राहुः परिकल्पनीयो यद्धांगे न कार्यं भृगुजाहिलोमम् २३५ अथ यात्राप्रक
रणमारभ्यते तत्रादौ: न षष्ठी न च द्वादशी चाष्टमी नो शिनी नाघातिथिः पूर्णिमा नक्षत्राहयादित्यमैत्रेंदुजीवांत्यहस्ताः श्रवोवास
वैरेव यात्रा प्रशस्ता २३६ पूर्वभान्कृत्तिकाद्ये पादे चन्द्रो व्यवस्थितः तावच्चक्रो भवेदन्यः सन्मुखे गमने शुभः २३७ अथ स
र्वांगीतिथिवारश्च नक्षत्रनामाक्षरसमन्वितम् द्विशत्र ३ चतुर्भिर्गुणितं सप्ता७ष्ट८ रस६ भाजितम् २३८ आदिशून्ये भवेद्धानि
मध्यशून्ये रिपोर्भयम् अंतशून्ये भवेन्मृत्युः सर्वांङ्गी विजयी भवेत् २३९ श्रीपतिः मूर्त्तिः १ कोशो २ धन्विनो ३ बाहनानि ४ मंत्रः

५शत्रुः ६मार्ग ७आयु ८मनस्व ९व्यापार १०स्वप्राप्ति ११रप्राप्ति १२रेवं लग्नात्भावाद्द्वादशैते विचिन्त्याः २४० क्रान्तिक्रूराख्याया
रिवर्ज्जं हिभावान्व्यापारं निघ्नतः सूर्य्यभौमौ सौम्याः पुष्णन्त्येव हित्वारिभावं शुक्रश्चास्तं शून्यमूर्त्तिः तथेन्दुः २४१ व्यापारिषु यमारो चे
च्छक्तिभाजः शुभग्रहाः प्रयाणे नृपतेर्यस्य हस्तस्यात्तस्य मेदिनी २४२ गुरुर्लग्ने रविः षष्ठे रन्ध्रे नेन्दुस्त्वगच्छतः यस्य तस्यारिसेनाग्ने
खलं मैत्रीवनस्थिए २४३ गुरौ केन्द्रे १।४।७।१० त्रिकोणे ५।९ च रवौ लाभे ११ च कर्मणि १० कल्याणयोगो भूपस्य यातुः कल्याण।
कृद्भवेत २४४ ग्रन्थान्तरे० लग्नारिकर्म्महिबुकेषु शुभेक्षितेज्ञे द्यूनान्त्यलग्नरहिते च शुभग्रहेषु पातुर्भयं न भवति प्रचुरेत्तमुद्रं
यद्यस्य नाकिसुतवारिसमागमेन २४५ श्रीपतिः एकेनापि ज्ञासृक्जिद्वाक्पतीनां योगः प्रोक्तः केन्द्रधर्मात्मजेषु १।४।७।१०।९।५
द्वाभ्यामेषां वाधियोगाभिधानं नूनं सर्वैरेव योगाधियोगः २४६ योगेन येन नृपतयोरिगृहं व्रजंति क्षेमेन तेगमनमागमनं च कुर्युः
क्षेमं यशोरिपुविनाशमथाधियोगे योगाधियोगेन जयं द्विरित्रीम २४७ जननसमयलग्नान्नैधने जन्मभाद्वा निजरिपुभवा।
नाद्वा शत्रुभे लग्नयाते पतिभिरुदितदीपैर्लग्नगेः पार्थिवानागमनमथ विषवा भक्षिणं तुल्यमेव २४८ रत्नकोशे० षष्ठाद्
ष्टमान्त्या १२ स्तगते विलग्नपेयात्रानदेया शुभैरपि ग्रहैः विनश्यते तेषां फलमत्र लग्नपो मृत्युं करोत्येव यतो हि भूपतेः २४९
लग्नाधिपे सूर्य्यसुते थनीचगे पराजिते नैधनशत्रुगेहे एवं नृपो यात्परिराजयोगे प्राप्नोति मृत्युं यमना वदन्ति २५० अथ या.
प्रस्थानविधिः गृहाद्गृहान्तरं गर्गः सीम्नः सीमान्तरं भृगुः शरक्षेपाद्वरद्वाजो वशिष्ठो नगराद्बहिः २५१ प्राच्यामहानि मुनयः प्रव

ल॰ सं॰ इन्तिसप्तम्यामप्यामतीवशुभदानि दिनानि पञ्चत्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसद्वयमुत्तरेऽस्यान २५२ मु
१४ न्काऽगच्छति यदि चेत्तैलगुडक्षीरपक्वमांसानि विनिवर्त्तते सरुग्ग्रः स्त्रीद्विजमपमानमृत्युः २५३ शाकुनादिकं ग्रन्थविस्तारभयान्न।
लिखितं यतो बालानां ग्रन्थविस्तारो दुस्तरः अन्यग्रन्थात् चगम्य विरुद्ध शकुनं विचार्य व्रजेत् सौदामिनी वर्षणवर्ज्जितेषु नाकालजे
षुभवेसेन्लोरेन्द्रः आसमराचाद्भुवमद्भुतेषु दिव्यान्तरिक्षक्षितिजेषु चैवम् २५४ इति लघुसंग्रहे यात्राप्रकरणम् तत्र रामः यद्भद्ध २१
क९ सुत ५ श ११ दिग्मित १० मसौ ग्रामः शुभो नामभात्स्ववर्ग्गो द्विगुणं विधाय परवर्ग्गाद्व्यगजैः सेवितम काकिन्यस्तवनयोः स्वतो द्वि
वरतो यस्याधिकः सोऽर्थदः २५५ अथ द्वार द्विज ८ वैश्य २ द्वा १० शूद्र ३।२७।११ नृप १।५।९ राशीनां हितं पूर्वतः गो २ सिंह ५ न
क्र १० मिथुनं ३ निवसेत्तन्मध्ये ग्रामस्य पूर्वकं कुम्भो लि ८ रुषा १२ तु णा स्थ्व ६ कर्को ४ धनु ९ स्तुलभ ७ मेष १ घटा ११ स्वतद्द्वर्ग्गाः स्व
पञ्चमपरा बलिनः स्युरेन्द्र्याः २५६ एकोनितेष्टर्क्षहता द्वितिथ्याहृपा निते ष्टायहतेन्दुनागैः ८१ युक्ताघनेश्चापि युता विभक्ता भूपाष्टि
भिः २१६ शेषमितो हि पिण्डः २५७ खेष्टायनक्षत्रभवोऽथ दैर्घ्यहृत्स्याद्विस्तृतिर्विस्तृतिहृच्च दीर्घता आयाध्वजो धूम्रहरि श्वगोखरे।
भाध्वांक्षकाः पिण्ड इहाष्टशेषिते २५८ अस्मत्संग्रहे पिण्डेनवा ९ ष्टा ८ ग्नि ३ गजा ९ ष्ट ८ संख्यैः क्रमेण गुणपः स्वलु पञ्चधा वा विभा।
जिते ष्टा ८ र्क १२ गजा ८ र्क्ष २७ स्वार्के १२० रायो घनक्षे गृहायुरुक्तम् २५९ ध्वजो धूम्रोऽथ सिंह श्व सौरभेयः खरो गजः ध्वांक्षश्चेति क्र॰
मेणैव तदायाष्टकमुदाहृतम् २६० रामः ध्वजादिकाः पूर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्व यमोत्तरे तथा प्राच्यां वृषे प्राग्यमयोर्गजे यवा पश्चा १४

दुर्दकृष्ठ्वेयमोद्विजोदितः २६१ मंमाग ८ तष्ठंव्ययईरितोऽसोध्रुवाऽदिनामाक्षरयुक्सपिण्डः नष्टोगुणैरिन्द्रकृतान्तभूपाद्यसाभ
येयुन्नेशुभोन्तकोऽत्र २६२ दिक्षुपूर्वादितोशालाध्रुवाभू १ र्द्धौ २ कृतो ४ गजाः ८ शालाध्रुवाङ्कसंयोगःसैकोवेश्मध्रुवादिकम २६३
श्रीपतिः॥ध्रुवश्च १ धान्यश्च २ जयश्च ३ नन्दः ४ खरश्च ५ कान्तश्च ६ मनोरमश्च ७ सुवक्त्रसंज्ञ ८ खलुदुर्मुखाख्यं ९ क्रूरं १० विपक्ष
११ धनदं १२ क्षयश्च १३।२६४। आक्रन्द १४ संज्ञंविपुलाह्वयंच १५ स्यात्षोडशंतद्विजया १६ भिधानम् वास्त्वारम्भेनक्षत्राणि यशो
धरः ध्रुवहरिमृदुपुष्यः स्वातिहस्तानुराधादितिवरुणधनिष्ठामूलभेसौम्यवारे उपचयगृहसंस्थैःपापगैः केन्द्रकोणे २४।७।१०।
९।५।बुधगुरुभृगुपुत्रेवेश्मकार्य्यंप्रशस्तम् २६५ तिथावरिक्तेशुभेनिशाकरेयोगेशुभेलग्नगतेस्थिरेभेद्व्यंगेच ३।६।१०।१२ क
तुःशुभैर्हविलग्नेपापग्रहैर्मृत्युविवर्जितेगृहे २६६ वैशाखेश्रावणेमार्गेफाल्गुणेचविशेषतः पत्नीपुत्रार्थलाभःस्याद्गृहंक
र्तुर्नसंशयः २६७ ह्रस्वपक्षेऽशुभंज्ञेयशुक्लेसर्वसमृद्धिदम् षष्ट्यमीवास्तुकार्येनिषिद्धाःपरिकीर्तिताः २६८ कर्क ४ नक्र १०
हरि ५ कुंभ ११ गतेऽर्के पूर्वपश्चिममुखानिगृहाणि तौलि ७ मेष १ वृष २ वृश्चिक ८ जातेदक्षिणोत्तरमुखानिचक्रखा २६९ पूर्वे
पश्चान्मुखंगेहंनलग्नास्मरगेविधौसौम्ययाम्यमुखंगेहंनकुर्य्यात्पातालखेगते २७० रवौगृहस्थोगृहिणीशशांकेधनेसिते
र्वगुरौचसौख्यम् विनाशमायातिबलेनहीनेनीचस्थितेवास्तमुपागतेचू २७१ सूर्य्यभाद्गणयेद्वास्तुचक्रंचद्विनभावधिम्
श्वेव ७ शा।१२ स्वरैः १० प्रोक्तमसत्सत्फलदंबुधैः २७२ कुजेवास्तौमध्यदेशेऽर्थहानिस्त्वीशानादौपुष्टिरैश्वर्य्यवृद्धिः नाशःस

नोः स्त्रीविनाशो मृतिश्च सम्पत्पीडा शत्रुतः स्याच्च सौख्यम् २७३ देवालये गेहविधौ जलाशये राहोर्मुखं शंभुदिशो विलोमतः मी
नार्कसिंहार्कमृगार्कतस्त्रिभे खातो मुखात्पृष्ठविदिक्शुभो भवेत् २७४ ईशानवायव्यक्रमेण स्रवविवारः पूर्वजवो दिक्करोथ ।
नदश्वोत्तरे स्रवः याम्यारोगप्रदो नैर्ऋत्ये यो धनहा पश्चिमे स्रवः २७५ नवमायगृहं कृत्वा पंचभागं तु दक्षिणे त्रिभागमुत्तरे कार्यं शेषं द्वार
प्रकीर्तितम् २७६ अथ प्रवेशः तत्र वशिष्ठः अथ प्रवेशो नवसद्मनः सौम्यायने जीवशिनेवलाढ्ये शितेच पक्षे शुभवासरे च वा ।
स्वर्चनं भूतबलिं विधाय २७७ माघेऽर्थलाभः प्रथमः प्रवेशः पुत्रार्थलाभः खलु फाल्गुने च चैत्रेऽर्थहा निर्धनधान्यलाभो वैशा
षमासे सुखपुत्रलाभः ज्येष्ठेषु मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च २७८ जीर्णगृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयोः श्रावण ।
केपि सत्स्यात् वेशोम्बुपेज्यानिलवाशयेषु नावश्यमस्तादिविचारणात्र २७९ अथ प्रवेशनक्षत्राणि ० हस्तः पुष्यपुनर्वसू शततभिषा
स्वातीत्रयारेवती रोहिण्युत्तरभंत्रयं हरिमृगो मूलं धनिष्ठा तथा कन्याकुम्भमृगालिसिंहमिथुनं स्वर्क्षे स्वराशौ शुभे मे वा राजीवशनि
ज्ञसोमभृगुजा वेश्मप्रवेशे शुभाः २८० तत्र गुरुः नन्दाभद्राजयाचैवपूर्णाः च तिथयः शुभाः अमावास्या च रिक्ता च वर्ज्जनीयाः प्र
यत्नतः २८१ श्रीपतिः त्रिकोणः ९।५ केन्द्रगैः १।४।७।१० शुभैरकरार्द्दकाष्टमन्त्यगैः ८
असद्भिः स्थिरोदयं गृहं विशेद्धले विधौ २८२ अथ कुंभचक्रम् रामः वक्त्रे भूरविभा ।
प्रवेशसमये कुम्भेऽग्निदाहः कृताः ४ प्राच्यामुद्वसनं कृता ४ यमगता लाभः कृ ।

| मुख | पूर्वपाद | दक्षि | पश्चिम | उत्तर | गर्भ | गुद | कण्ठ |
|---|---|---|---|---|---|---|---|
| १ | ४ | ४ | ४ | ४ | ४ | ३ | ३ |
| दाह· | उद्वसन | लाभ | श्रीः | कलि | नाशः | स्थैः | सौख्यं |

ता: ४१ श्चिमे श्रीर्वेदा४ कलिसन्नरे युगमितागर्भे विनाशो गुरोरामः स्थैर्य्यं गतः स्थिरत्वनन लाः करठं भवेत्सर्वदा २८३ इति
श्री लघुसंग्रहे लक्ष्मीनारायणकृते वास्तुप्रकरणम् अथ जातकाध्यायः लघुजातके षष्टेष्टमे वा चन्द्रः सद्यो मरणाय।
पापसंदृष्टः अष्टाभिः शुभदृष्टो वर्षमिश्रैस्तदर्द्धेन २८४ सुत ५ मदन ७ नवा ९ न्त्य १२ लग्न १ रन्ध्रे ८ ष्वशुभयुतो मरणाय शीतरश्मिः
भृगुसुतशशिपुत्रैर्देवपूज्यैर्यदि बलिभिर्युतो वा लोकितो वा २८५ एकोपि पापोष्टमगः शत्रुगेहे पापवीक्षितो वर्षात मारयति नरं जा
तं सुधारसोपेनपीतोपि २८६ लग्नाधिपजन्मपतो षष्ठाष्टम ८।रिः फ १२ गैः प्रसवकाले अस्तमितो मरणकरो शशि प्रमितैर्वर्दे
द्वर्षम् २८७ जातकाभरणे राहुर्भवेज्जन्मनि केन्द्रवर्त्ती क्रूरग्रहै श्चापि निरीक्ष्यमाणः भवति वर्षैर्दशभिर्विनाशं वदन्ति वा षोड
शके श्च केचित् २८८ अथ शुभयोगः पक्षे शितभवति जन्मयदिक्षपापांकु खेतयाहनि शुभाशुभदृश्यमानः तेचन्द्रमा।
रिपु विनाशगतोपि यत्नाद्रा यत्सुरक्षति पितेवशिशुं न हन्ति २८९ एकोपि यदि केन्द्रस्थो भार्गवो वाङ्गिरांपतिः नवमे वा सुत।
स्थानि सर्वारिष्टं निवारयेत् २९० लग्नाधिपो वाजीवो वा शुक्रो वा यदि केन्द्रगः तस्य पुरुषस्य दीर्घायुः सभवद्राजपूजितः २९१ य
दावीक्षितो यामिनीशो दिनेशं बुधश्चापि शीतांसमुद्वीक्षितश्च नराज्योतिषान्येन गण्येन किं स्यात्सजातो भवेदीश्वरो दीर्घजीवी
२९२ लघुजातके रविवर्ज्यद्वादशगैरणफाचन्द्राद्वितीयगैः सुनफाउभयस्थितैर्दुधुराकेन्द्रद्रुमसंज्ञितोन्य २९३ सच्छीलविषय।
सुखान्वितं प्रभुख्याति युक्तमनफा सुनफायां धीधनकीर्त्तियुक्त मात्माजितैश्वर्य्य करोति २९४ वहुभृत्यकुटुम्बारंभो नित्यमु-

ल॰ सं॰ ह्निग्नमपीसे ध्रुरके भृत्यकं दुःखितमधनं यातं केन्द्रद्रुमे विद्यात् २९५ जातकाभरणे॰ तत्र डिंभाख्यचक्रविचारः डिंभाख्यचक्रे
१६ रविभाद्बभानां त्रयं न्यसेन्मूर्ध्नि मुखे त्रयं च ३ द्वे २ स्कंधयोर्द्वे २ भुजयोर्द्वयेच पाणिद्वये वक्षसि पंच भानि नाभौ च लिंगे च तथैकमेकं
जान्वोर्भषट्कं परिकल्पनीयं पादद्वये भं हि तयं क्रमेण मुनिप्रवर्ज्यैः फलमुक्तमत्र २९६ अल्पायुष्वरणस्थिते च गमनं देशान्तरं
जानुभे गुह्ये स्यात्परदाररलंपट पटुर्नाभौ च सन्तुष्टये ऐश्वर्य्यं हृदि चौरकर्म करयोर्बाह्वोर्वलं स्कन्धयोर्द्रव्यं वक्त्रगते च इ-
ष्टमशनं राज्यं शिरस्थोडुभिः २९७ कन्याजन्मनि डिंभचक्रजपाणिवे मस्तके त्रीणि ऋक्षाणि सप्त भानि मुखे न्यसेत्
स्तनद्वये ऽष्टऋक्षाणि हृदये त्रीणि भानि च २९८ नाभौ त्रीणि तथा गुह्ये त्रीणि सूर्य्यर्क्षतो न्यसेत् क-
न्याजन्मनि डिंभाख्यचक्रमुक्तं स्वयंभुवा २९९ शीर्षे संतापयुक्ता स्यान्मुखे धान्यधनान्विता स्तनद्व-
ये स्वामिप्रेमवृद्धिः कामस्तथा पुनः ३०० हृदि सौख्ययुता गुह्ये नारी स्याद्व्यभिचारिणी स्वसंतुष्टा स्वा-
मिरता नाभौ स्याज्जन्मकालके ३०१ अथ दशा त्रि ३ चतु ४ स्त्रि ३ चतु ४ श्चैव त्रि चतु ४ स्त्रि ३ चतुः
क्रमात् रचमबुशगुशुकृहकृत्तिकादिदशा लिखेत् ३०२ आदित्ये षड्वर्षाणि ६ सोमे पञ्चदशानि च
॥१५॥ भौमे चाष्टवर्षाणि ८ बुधे सप्तदशानि च १७।१९२ शनौ च दशवर्षाणि १२ गुरोरेकोनविंशतिः
१९ राहोर्द्वादशवर्षाणि १२ शुक्रस्याप्येकविंशतिः २०॥ ३०३ क्रूरग्रहदशायां च बहुशो जायते क्ष १६

तिःशुभग्रहदृष्टांप्राप्यनराणांसुखमादिशेत् ३०४ लग्नाच्चतुर्थगःपापोयदिस्याद्बलवत्तरः तदामातुर्वधंकुर्य्यात्तत्केन्द्रेचापरोय
दि ३०५ द्वादशेरिपुभावेवायदापापग्रहोभवेत् तदामातुर्वधंकुर्य्याद्दरिराशौस्थितोयदि ३०६ इतिलघुसंग्रहेजातकप्रकरणम्॥
अथप्रश्नविचारः॥ तत्रषट्पञ्चाशिकायाम् वृषसिंहवृश्चिकघटैर्द्विस्थानंगमागमौनस्तः नमृतंनचापिनष्टंनरोगंशांति
नचाभिभवः ३०७ तद्विपरीतैस्तुचरैर्द्विःशरीरैर्मिश्रितंफलंवाच्यम् लग्नेन्दोर्वा·क्रव्यशुभदृष्ट्याशोभनमतोऽन्यत् ३०८ अ
थलाभप्रश्नः॥त्रि३पञ्च५लाभा११स्त७समयेषुसौम्यालाभप्रदानेष्टफलाश्चपापाःतुलाथकन्यामिथुनौघटश्चनृराशय।
स्तेषुशुभंवदन्ति ३०९ इन्दुर्हिसप्तदशमायरिपुत्रिसंस्थःपश्येद्गुरुःशुभफलंप्रमदाकृतंस्यात् लग्नार्थधर्म्मसुतनैधनगा।
श्चपापाःकार्य्यार्थनाशभयदाःशुभदाःशुभाश्च ३१० भद्रोत्सले·पापैर्लग्नोपगतैः शरीरपीडांविनिर्दिशेत्कलहम् सुखसं।
स्थैःसुखनाशंगृहभेदंबन्धुविग्रहंचवदेत् ३११ अस्तेगमनविरोधःकर्म्मस्थेचन्याविसनाशश्च शुभदृष्टिसंयोगात्प्रस्तद्धुःकृच्छ्रा
द्वादशेत्सिद्धिम ३१२ दूरगतस्यागमनसुतधनसहजस्थितैर्ग्रहैर्लग्नात् सौम्यैनष्टआप्तिर्लब्ध्वागमनंगरुशिताभ्याम् ३१३ द्वितीयेकेन्द्र।
तोऽन्येतियदास्वैरस्तदागमः आपिपास्तर्ग्रहंदृष्ट्वाब्रूयादितिप्रसंकितम् ३१४ पञ्चमेशोथलग्नेशोविषमर्क्षगतोयदापुत्रज
न्मप्रदोज्ञेयोकन्यानांसमराशिगौ ३१५ सुताधिपोनराशिस्थःपुंराशिस्थोविलग्नयः वीक्ष्यतःपुत्रदःप्रोक्तोयुग्मराशौच।
कन्यका ३१६ लग्नाद्विषमोपगतःशनैश्चरःपुत्रजन्मदोभवति जीवरविलग्नचन्द्रमा·द्विषमोपगतानरंकुर्युः ३१६ गर्भिणी

ल॰ सं॰ नामसुल्कादितिथिभिर्मुनीभिर्युता रामेभागेसुताद्वाभ्यांसुतश्चैकेनखेनवा ३१७ हृतेनोक्ताहिवाणी खलुदशगुणितारा
१७ शिचक्रे विमिश्राभूयोभूस्वदत्तानिकटजनयुतासप्तभागावशेषात् एके१वह्नौ३शरेवाविषमपदयुतेनास्तिलाभोनराणाम
शून्येवेदे४रसे६वाभवतिचनियतंकार्यसिद्धिस्तुराजम् ३१८ इतिश्रीलघुसंग्रहेलक्ष्मीनारायणकृतेप्रश्नसूचनप्रकरणा
म्॥ अथकिञ्चित्स्वरशास्त्रोक्तमुच्यते कादिहंतान्लिखेद्वर्णान्स्वराधोङञणोज्झितान् तिर्य्यक्पंक्तिः क्रमेणैवपञ्चत्रिंशत्प्रको
ष्ठके ३१९ नराणामादितोवर्णोयस्मात्स्वरादधः स्थितः सस्वरस्तस्यवर्णस्यवर्णस्व
रइहोच्यते ३२० नभस्येमार्गवैशाखेअस्वरस्योदयोभवेत् आश्विनःश्रावणाषा
ढेष्विकारोनायकःस्मृतः ३२१ उकारश्चैत्रपौषेस्यादेकारोज्येष्ठकार्तिके ओकार
उदयंयातिमाघफाल्गुणमासयोः ३२२ किंचिल्लाभकरोबालःकुमारस्त्वर्द्धलाभदः
सर्वसिद्धिंयुवादत्तेवृद्धेहानिर्मृतेमृतिः ३२३ इतिपञ्चस्वरचक्रम् चन्द्रकालानलंच
क्रंव्योमाकारंलिखेद्बुधः चतुर्दिक्षुत्रिशूलानिमध्येभिन्नानिकारयेत् ३२४ मध्येत्रि
शूलपूर्वस्थंदिनऋक्षादिलिख्यतेत्रिशूलेचवहिर्मध्येतथैवच ३२६ त्रिशूलेचा
भवन्मृत्युर्मध्यमंबहिराष्टकम् लाभः क्षेमोजयः प्रज्ञाचन्द्रगर्भेनसंशयः ३२७

| | | | | |
|---|---|---|---|---|
| अ | इ | उ | ए | ओ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| १।६।११ | २।७।१२ | ३।८।१३ | ४।९।१४ | ५।१०।१५ |
| नंद १ | भद्र ५ | जय ५ | रि ५ | पू ५ |
| भाद्रप | का।आ | चैत्र० | ज्येष्ठ | माघ |
| वै | श्रा | पौ | का | फा |



॥ अथ चन्द्रकालानलचक्रम् ॥

वर्ज्जनीयं प्रयत्नेन प्रथमाष्टकत्रिपञ्चकम् ऋक्षं द्वाविंश
कं चात्र कालरूपं न संशयः ३२८ लाभालाभं सुखं दुःखं।
जयं चैव प्रजायते चन्द्रकालानलं चक्रं ज्ञानसंशयवर्जि
तम् ३२९ रोगे च कुजनक्षत्राद्दिनऋक्षाच्च युद्धके जय
तो क्रान्तिकर्क्षाद्वै सूर्य्यर्क्षाद्न्यतो वधे ३३० इति चन्द्रका
लानलचक्रम् ऊर्द्ध्वगास्त्रित्रिशलाया स्त्रिस्त्रः तिर्य्यक्सं
स्थिताः द्वे द्वे नाड्येः स्थिते कोणे शङ्कयुग्मं तथैव च ३३१ म
ध्ये त्रिशूलं दण्डाधो भानुभाद्भममण्डलम् सर्वमार्गेण।
दानवं त्वष्टाविंशतिसंख्यया ३३२ नामऋक्षं स्थितं य
त्रैतेयं तत्र शुभाशुभम् अधोगतैस्त्रिनक्षत्रैरुर्द्ध्वगैर्वधबं
धनम् ३३३ ऋक्षाष्टके जयो लाभो ऋक्षषट्के तथा पुनः श
ङ्गयुग्मे रुजा भंगो मृत्युः शूलत्रये स्फुटम् ३३४ यात्रा।



॥ अथ सूर्य्यकालानलचक्रम् ॥

ल सं युद्धविवाहेषुरोगार्त्तव्यसनेतथा सूर्य्यकालानलंचक्रंज्ञातव्यन्तुप्रयत्नतः ३३५ इतिसूर्य्यकालानलंचक्रम् आर्द्रादिकंलिखेच्चक्रं
१८ मृगान्तंचत्रिनाडिकम् भुजङ्गसदृशाकारंमध्येमूलप्रतिष्ठितम् ३३६ रवीन्दुनामनक्षत्रमेकनाड्यांयदाभवेत् तदामृत्युर्न
सन्देहोरोगाद्वापरिणयवा ३३७ इतित्रिनाडीचक्रम् मुखेदक्षेपाणौचरणयुगलेवक्षसिकरेशिरोभागेनेत्रेनृषुचगुदके
नामर्क्षान्निभात् लिखेदेकं१वेद४रस६शर५चतु४स्त्रि३द्वि२युग२लंरणेहानिःपूजाभ्रमधनभयंभूसुखेमृतिः ३३८ ज
न्माष्टंकंद्वादशंतूर्य्यगोपिहृदिशीर्षसव्येतरबाहुनेत्रे तदासुखंविघ्नंकरस्त्रिषष्ठेलाभेषुवक्त्राघ्रिभुजेगुरस्थे ३३९ इतिश

| | | |
|---|---|---|
| आ | पु | पू |
| उ | म | श्ले |
| उ | ह | चि |
| अनु | वि | स्वा |
| ज्ये | मू | पू |
| ध | अ | उ |
| श | पू | उ |
| भ | अ | रे |
| ल | रो | मृ |

निचक्रम् अथकोटचक्रम् क्रूरागर्भेपुरंघ्नन्तिप्राकारेखण्डिकारकाः वहि
स्थावेष्टकेसैन्येभगदानात्रसंशयः ३४० क्रूरागर्भेशुभावाह्येनिश्चितंगृह्यतेपु
रम् सौम्यामधोवहिः क्रूराश्चसाध्यंदुर्गमुच्यते ३४१ अथकोटपालकविधिः
शुक्रःसौम्योगुरुमन्दराहवोभानुजःशितःबुधेन्दुभास्करेशौरीःसौम्येतिमाध
वामताः ३४२ रविर्भौमःशितःसौम्योगुरुःशौरिःशशिस्तमःवर्गेशास्त्वष्टुवर्गो
दौकोटपालाःप्रकीर्तिताःकोटाधिपःकोटमध्येकोटपालोवहिःस्थितःतदा
कोटभयंनास्तिविपरीतास्तुहानिदा ३४३ बाह्यशत्रुप्रवेशर्क्षेसंग्रामंयदिकार

| | | |
|---|---|---|
| मुखे | १ | हानिः |
| दक्षेन्द्रो | ४ | पूजाः |
| चरणयो | ६ | भ्रमेन |
| हृदय | ५ | धनम् |
| करयोः | ४ | भयम् |
| लीमः | ३ | भूपाल |
| नेत्रे | २ | सुखम् |
| गुद | २ | मृत्युः |
| इति शनिचक्रम् ॥ | | |

१८

प्रेत नदासिध्यतितं दुर्गोनान्यथारुद्रभाषितम् ३४४ गुरोनिर्गमेबक्रीकर्थचिन्द्रखेचराः दुर्गमुक्तानदाकालेदुर्गस्थ्यःन
पल्लापते ३४५ क्रूरेस्तंभसंस्थेषुवक्रितेषुपलायते विहायदुर्गंदुर्गेशाः सन्देहोनात्रकारयेत् ३४६ दुर्गनाम्नः स्वरोयस्यवालो
वास्तमितोपिवा तद्दिनेप्रारभेद्युद्धंदुर्गः सिध्यतिनान्यथा ३४७ पुरनक्षत्रादीशानकोणतोलिखेत् गणनापिकार्य्याइतिकोट
चक्रम् लिखेत्सर्वतोवामतस्वेत्रमुख्याश्चतुर्दिक्षुसव्येनयामानयाष्टौ दिगष्टभ्रमन्मासतः सव्यतश्चपृष्ठेऽथदक्षेशुभोक्षेत्रपा
लो ३४८ इतिक्षेत्रपालभूमिः दैवज्ञचिंतामणौ इन्द्राग्नियमेशपासिहुतभुक्सौम्यासुरेषुक्रमात् यामार्द्धदिवसेप्रयातिजयतोद
क्षेथपृष्ठेतमः ३४९ रा
त्रौपश्चिमवह्निसौम्यनि
ऋतिःप्राग्वातयाम्येशके
ष्वीशानाघटिकाद्वयंपु
नरसौतुर्य्येचतुर्य्येदिशि
३५० इत्यर्द्धयामः प्राची
कुबेरशिविराक्षसध

| | | | | |
|---|---|---|---|---|
| | ई· ३।०।८ | पू· ११९ | अ· ३।११ | |
| | उ· १०।२ | | द· १३।६ | |
| | वा· १५।७ | प· | नै ४।१३ | |

चै· म· अग्न पू·
पे ८ वै· ३ भा· ७ श्री· उ· वा ६
अ· २ आषा· कार्ति· द· फा· नै· ४
प· ज्येष्ठः मा: आश्वीन

| | | | | |
|---|---|---|---|---|
| | ई· २४ | पू· १२ | अ· २६ | |
| | उ ७ २ | दिवाऋ ईयाम राहु | द ३ २ | |
| | वा २ १ | प ५ २ | नै २ ८ | |

मेराजतोयाधिपानिलमहेशदिशिक्रमेण यामार्द्धकैः प्रतिपदादितिथौ महेशात्रक्षस्थिताशुभकरीखलुपृष्ठभागे ३५१ इतिश्री
लघुसंग्रहेलक्ष्मीनारायणकृतेचक्रप्रकरणमसमाप्तम चतुराशिचतुःकोणंनराकारंलिखेद्बुधः रविभाज्जन्मभंलेख्यमीशा।
नादौचसव्यतः ३५२ शत्रेशीर्षेपलायंतेशत्रुः कर्णयोर्जायतः दक्षिणहस्तेचपादेचशत्रुशत्रोपसर्पति वामपादेचहस्तेचनि
श्चितंधार्य्यतेरिपुः ३५३ दुर्गानक्षत्रमारभ्यसर्प्योभवतिपञ्चमम अथवाद्वादशेऋक्षेतथाप्येकोनविंशतिः ३५४ षड्विंशेवा
थनक्षत्रेपुरभंगोविनिर्दिशेत धनहारविवेधः स्यातवल्लहाभौमकेतयोः ३५५ पुरहाशनिवेधःस्यात राहुश्चन्द्रस्तथास्त्रिया
सप्तदशगः पुरर्क्षाद्यदितिभास्करः ३५६ पुरस्यपुरनाथस्यनवमेभास्करेपिच ५।१२।२७।१९ धनहा ५ बल्लहा १२ पुरहा १९
पुरस्पहा २७ स्त्रिहा २६ धनहाबल्लहाचैवपुरहापुरपहास्त्रिहा अश्विन्याद्यंलिखेच्चक्रंसप्त विंशतितारकंत्रिकोणंनवभि।
र्वेधः कर्तव्यातिर्य्यगाकृतिः अश्विनीरेवतीवेधोवेधस्वात्यश्विनिज्येष्ठयोः मघापौषेमघाश्लेषेश्लेषामूलयोस्तथा एवंसं
घट्टचक्रेणकार्य्योऋक्षगताग्रहाः भूपनामर्क्षसंघट्टेयुद्धंभवतिनान्यथा ३५७ निर्वेधसौम्यवेधेचयुद्धंनास्तिनरेन्द्रयोः॥
क्रूरवेधेभवेद्युद्धंतत्कालेघोररूपिणं ३५८ युद्धकांक्षीभवेद्राजापुष्यभंक्रूरवेधितम् युद्धद्वेषीभवेत्सौम्यंतथावेधविवर्जिते
३५९ सौम्यक्रूरविभागेनमित्रामित्रक्रमेणचवक्रातिचारगत्याचयुद्धखल्पंचनास्तिच ३६० इतिसंघट्टचक्रम् प्रद्योतना।
त्यजन्नगाङ्कंसूर्य्यनवेन्दुषड्विंशमितानिभानिशंतेमहीनैवगृहंविधेयंतडागवापीखननंप्रशस्तम् ३६१ अन्धकंतदनुमन्दलोचनं १९

मध्यंलोचनमतः सुलोचनम् रोहिणीप्रभृतिभंचतुर्विधनूनमत्रगणयेत्पुनः पुनः ३६२ लाभोन्धकेनिकटएवहृतस्यचौरेईव्यस्यलब्धिरिहभकरभेप्रयत्नात् हरेस्तुतिश्विपीडिभेनचतद्वनाप्नोतिना ३६३ ॥ इतिश्रीलक्ष्मीनारायणकृतेलघुसंग्रहसमाप्तः ॥ ❖ ॥ सम्वत् १९४१ ॥ ❖ ॥ मिः माघ सुदी ५ बुधवार ॥ ❖ ॥ ❖ ॥ ❖ ॥












